**जाणंतस्सवि एवं अनिवित्तीपच्चओ बहू बंधो। तहवि न करेइ माणं दिया व राओ पमाएणं ॥ १०४ ॥**

जानानस्याप्येनं यथा अनिवृत्तिप्रत्ययः प्रभूतः कर्म्मबन्धः, तथापि, अप्रत्याख्यानस्य सर्वमुक्तं मूलं पूर्वभवशरीरादिकमपि, तथा चागमः—" वद्धेल्लया य मुक्केल्लया य " इत्यादि, यद्यप्येवं तथापि न करोति ' मानं ' प्रमाणं दिवा रात्रौ वा 'प्रमादेन' आलस्यादिनेति गाथार्थः ॥ गुणद्वारमाह—

**चाउम्मासावहिणा बहुयं गहियं न तस्स संपत्ती। एवं नाउं विहिणा संखेवं कुणइ राईए ॥ १०५ ॥**

चातुर्मासिकावधिना प्रभूतं गृहीतं धनधान्यादि न तस्य—धनधान्यादेः सम्प्राप्तिः, एवं ज्ञात्वा विधिना गुरुसमीपे संक्षेपं करोति रजन्यां, रात्रौ व्यवहारस्याकरणात् प्रत्याख्याते आश्रवनिरोधादिति गाथार्थः ॥ कामदेवोऽत्रोदाहरणम्—

चम्पायां कामदेवः श्रावकः, भद्रा भार्या, तस्य च परिग्रहपरिमाणं वृद्धिप्रयुक्ताः षट् कोटयः षट् कोटयो निधानप्रयुक्ताः प्रविस्तरप्रयुक्ताः षट्, सर्वाः अष्टादश कोटयः, हलशतानि पंच, बोहित्थशतानि पंच, दश गोवर्गाः दशसाहस्रिकाः, एवं च स्थितो विंशतिं वर्षाणि, ततः पौषधशालायां प्रतिमाऽभ्यासं कुर्वतः शक्रप्रशंसायामचलनलक्षणायां देवोऽश्रद्दधानः तस्य क्षोभणायागतः, रात्रौ कायोत्सर्गस्थस्य सर्पगजेन्द्रपिशाचादिरूपेण क्षोभयितुमारब्धो, न चात्मीयसत्त्वाच्चलितः, प्रकटीभूतो देवो, वंदित्वा स्वस्थानं गतः, प्रभाते भगवद्वंदनार्थं गतः, भगवता च रजनीव्यतिकरं पुरस्कृत्य क्षान्तिगुणमङ्गीकृत्य साधुभ्योऽग्रतः प्रशंसितः, ततः श्रावकधर्म्मं निष्कलंकं प्रतिपाल्य सौधर्म्मे कल्पेऽरुणाभे विमाने देव उत्पन्नः, तस्माच्च्युता महाविदेहवर्षे सेत्स्यतीति ॥ यतनाद्वारमाह—

**एगमुहुत्तं दिवसं राई पंचाहमेव पक्खं वा। वयमिह धारेउ दढं जावइयं उस्सहे कालं ॥ १०६ ॥**

एकं मुहूर्त्तं–द्विघटिकालक्षणं दिवसं–चतुःप्रहरप्रमाणं रात्रीं–चतुःप्रहरात्मिकामेव ' पंचाहमेव ' पंचाह्निकमेव ' पक्षं वा ' पंचदशदिनरूपं वा व्रतमिह नियमं ब्रह्मचर्यादिलक्षणं ' धारयतु दृढं ' प्रतिपालयत्वित्यर्थं यावत्प्रमाणं कालमुत्साहशक्तिः–वीर्योल्लासशक्तिरिति गाथार्थः ॥ अतिचारद्वारमाह—

**आणयण पेसणेऽविय पओग तह सद्दरूववाए य। बहिपोग्गलपक्खेवो पंचऽइयारे परिहरेज्जा ॥ १०७ ॥**

आनयनमन्यतः ग्रामाद् गवादेः, स्वयं प्रस्थितं ब्रुवते–मदीयो गौः अस्माद् ग्रामाद् आनयनीयः, प्रेष्यप्रयोगः प्रेषणं कर्म्मकरादेः, गृहीतदिक्परिमाणादूर्द्ध्वं, द्विविधत्रिविधभंगेन, ततो लेखवाहादिकं प्रेषयति, तथा शब्दानुपातः कासितादिना समीपवर्त्तिनं गच्छंतं ज्ञापयति, रूपानुपातः उच्चैः स्थित्वा शरीरसंदर्शनं, बहिः पुद्गलप्रक्षेपश्च निकटवर्त्तिनां सम्बोधनार्थं, उक्तंच– " सुण्णहरं जिणवरमंदिरं च पडिवज्जिऊण पोसहिओ । बहियापोग्गलखेवेहिं कुणइ सण्णऽण्णलोगस्स ॥१॥ " एतान् पंच अतिचारान् देशावकाशिकविषयान् परिहरेदिति संटंकः इति गाथार्थः । भंगद्वारमाह—

**सव्ववयाण निवित्तिं दियहं काऊण तक्खणा चेव । आउट्टियाएँ भंगं निरवेक्खो सव्वहा कुणइ ॥ १०८ ॥**

सर्वव्रतानां प्राणातिपातपृथिव्यादीनां निवृत्तिं कृत्वा दिवसं सकलं तत्क्षणादेव ' आकुट्टिकया ' 'उपेत्य' 'भङ्गं' विनाशं निरपेक्षः सर्वथा व्रतातिचारं प्रति ' करोति ' निर्वर्त्तयतीति गाथार्थः ॥ भावनाद्वारमाह—

**सव्वे य सव्वसंगेहिं वज्जिए साहुणो नमंसिज्जा । सव्वेहिं जेहि सव्वं सावज्जं सव्वहा चत्तं ॥ १०९ ॥**

सर्वे सर्वसंगैः–मातापित्रादिलक्षणैर्वर्जिता ये हि तान् साधून् नमस्कुर्यादिति संटंकः, सर्वैर्यैः सर्वं सावद्यं ' सर्वथा '

सर्वैः प्रकारैः 'त्यक्तं' परित्यक्तमिति गाथार्थः ॥ उक्तं द्वितीयं शिक्षाव्रतं, साम्प्रतं तृतीय पौषधव्रतं नवभेदमाह, तत्रापि प्रथमद्वारमाह—

पोसहउववासो पुण आहाराई नियत्तणं जं च । कायव्वो सो नियमा अट्ठमिमाईसु पव्वेसु ॥ १११ ॥

तत्र पौषधः प्रथमदिवसे पुष्टिकरणं तत्रोपवसनं पौषधोपवासः, तत्राहारादीनां चतुर्णां प्रकाराणां अन्यतमनिवर्त्तनं यच्च स च कर्त्तव्यः पौषधोपवासः अष्टम्यादिपर्वदिवसेषु, उक्तंच—"पोसहउववासो उण अट्ठमिचाउद्दसीसु जंमि दिणे । नाणे नेव्वाणे चउम्मासे अट्ठाहि पज्जुसणे ॥ १ ॥" इति गाथार्थः ॥ भंगद्वारमाह—

आहारदेहसक्कारबंभवावारपोसहो चउहा । एक्केक्कोऽविय दुविहो देसे सव्वे य नायव्वो ॥ ११२ ॥

"आहारे' त्ति आहारपोषधो देशतः सर्वतश्च, देशत एकभक्तादि, सर्वतः चतुर्थं, 'देहसक्कारे' त्ति शरीरसत्कारपोषधः देशतः सर्वतः, देशतः स्नानाभ्यङ्गनादि, सर्वतस्तु सर्वस्यैव शरीरसत्कारस्य रागबुद्ध्या, 'बंभे' त्ति ब्रह्मचर्यपौषधः देशतः सर्वतश्च देशतः महरादिमानेन (सर्वतोऽहोरात्रान्तं, अव्यापारे देशतः) एकस्य कस्यचित् विवक्षितव्यवहारस्य वा, सर्वतः सर्वस्य सावद्यगृहव्यापारस्याहोरात्रं, उक्तं च—"सावज्जजोगविरओ झाणज्झयणम्मि निच्चलो धणियं । जिणभवणगओ चिट्ठइ अव्वावारम्मि पोसहिओ ॥ १ ॥ चेइयसाहुअभावे भिन्ना भणिया घरस्स एगंते । एगस्स समिद्धस्स य पोसहसाला इमा भणिया ॥२॥ चंदवडेंसय संखो सुदंसणो कामदेव अभओ य । एगागिणो य एए पोसहसालासु कुव्वंति ॥ ३ ॥" आवश्यकचूर्ण्यां, तथा 'न हु होइ सावगस्स य पोसहपडिमस्स ( किंपि ) सावज्जं । गाहा० जेण जिणकप्पियस्स गाहा०, इत्याद्यागमगाम्भीर्यं आगमज्ञैरेव ज्ञायते, तच्च न लिख्यते, अल्पज्ञानानामतिमोहहेतुत्वात् मिथ्यात्वकारणत्वाद्विप्रतिपत्तेश्चेति गाथार्थः ॥ तृतीयद्वारमाह—

**विरइफलं नाऊणं भोगसुहासाउ बहुविहं दुक्खं । साहुसुहकोउएण य पडिपुण्णं पोसहं कुणइ ॥ ११३ ॥**

विरतिफलं सुखादि ज्ञात्वा भोगसुखाशातो—भोगेच्छायाः 'बहुविधम्' अनेकप्रकारं 'दुःखम्' असन्तोषादिकं, यथा लाभस्तथा लोभः कपिलब्राह्मणस्येव, 'साधुसुखकौतुकेन च' यतिसुखौत्सुक्येन देवराजाधिकसुखाभिलाषेण च, 'परिपूर्णं' चतुर्विधमपि पौषधमनन्तरोदितं करोतीति गाथार्थः ॥ दोषद्वारमाह—

**जे पोसहं तु काउं चइया य परीसहेहिं भज्जंति । नालोएंति य भग्गं भमंति भवसायरे भीमे ॥ १४ ॥**

ये केचन गुरुकर्म्माणः पौषधं चतुर्विधमपि कृत्वा त्याजिताः परीषहैः—क्षुन्मलस्त्रीपरीषहादिभिः तस्य व्रतस्य भंगं कुर्वंति, तथा भग्नं सन्नालोचयंति—गुर्वन्तिके न कथयन्ति तं व्रतभंगं ते जीवा भवसागरे—समुद्रे भ्रमन्ति—पर्यटन्तीति गाथार्थः ॥ गुणद्वारमाह—

**धीरा य सत्तिमंता पोसहनिरया लहंति परमगइं । दिट्ठंतो इह संखो आणंदो जणमणाणंदो ॥ ११५ ॥**

'धीराः' बुद्धियुक्ताः 'शक्तिमन्तः' सामर्थ्यवन्तश्च 'पौषधनिरता' पौषधासक्ताः 'लभंते' प्राप्नुवन्ति 'परमगतिं' स्वर्गापवर्गादिगतिं तस्मिन् भवे भवान्तरे वा, दृष्टान्तोऽत्र शंखः श्रमणोपासकः तथाऽऽनन्दश्रावकश्च, किंभूतः? 'जनमनआनन्दः' लोकानन्दविधायीति गाथार्थः ॥ भावार्थः कथानकगम्यस्तच्चेदम्—

तेणं कालेणं तेणं समएणं सावत्थी नामं नयरी होत्था, उत्तरपुरच्छिमे दिसिभागे कोट्ठए नामं चेइए होत्था, संखे नाम समणोवासए, उप्पला नाम भारिया, तत्थेव सावत्थीए पोक्खली नाम सावए वीयनामेणं रायए, तए णं ते दोवि सावया बहुपरिवारा बहुरिद्धिपत्ताऽभिगयजीवाजीवा उवलद्धपुन्नपावा आसवसंवरनिज्जरकिरियाहिकरणबंधमोक्खकुसला सावयवन्नओ, तेणं

कालेणं॰ समणे भगवं महावीरे पुव्वाणुपुव्वि चरमाणे गामाणुगामं दूइज्जमाणे सुहंसुहेण विहरमाणे जेणेव सावत्थी नयरी जेणेव कोट्ठए चेइए तेणेव उवागच्छइ उवागच्छित्ता अहारूवं उग्गहं जाव विहरइ, तएणं ते समणोवासया इमीसे कहाए लद्धट्ठा समाणा जेणेव सयाइं गेहाइं तेणेव उवागच्छंति ण्हाया कयबलिकम्मा पुरिसवग्गुरापरिखित्ता धवलेणं छत्तेणं धरिज्जमाणेणं सावत्थीनयरीए मज्झंमज्झेणं जेणेव कोट्ठए चेइए जेणेव समणे भयवं महावीरे जाव पंचविहेणं अभिगमेणं अभिगच्छंति, तिविहाए पज्जुवासणाए पज्जुवासंति, धम्मकहा भाणियव्वा जह जीवा बुज्झति मुच्चतीत्यादि, ते समणोवासया धम्मं सोच्चा निसम्म हट्ठतुट्ठा समणं भयवं महावीरं वंदित्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया। तएणं संखे समणोवासए सेसए एवं वयासी [ नो खलु कप्पए अज्ज अम्हं पोसहसालाए पक्खियं पोसहं पडिजागरमाणाणं विहरित्तए] कप्पइ अज्ज अम्ह विपुल असणं पाणं खाइगं साइमं उवक्खडावेत्ता तं पुण असणपाणखाइमसाइमं आसाएमाणाणं विहरित्तए, तक्खणं पोक्खली समणोवासए संखं समणोवासय एवं वयासी—अच्छह ण तुब्भे सुनिव्वुयवीसत्था अहण्णं विउलं असणपाणखाइमसाइमं उवक्खडावेमि, एवं भणित्ता अप्पणप्पणाइं गिहाइं संवहिया, तए णं संखस्स समणोवासयस्स एयारूवे अब्भत्थिए समुप्पज्जित्था—नो खलु अज्ज अम्ह कप्पइ विउलं असणपाणखाइमसाइमं आसाएमाणाणं विहरित्तए, कप्पइ मे पोसहसालाए एगाणियस्स अबीयस्स उम्मुक्कमणिसुवण्णस्स विहरित्तए, एवं संपेहेइ २ जेणेव सए गेहे तेणेव उवागए, उप्पलं समणोवासियं आउच्छित्ता जेणेव पोसहसाला जावपोसहसालं अणुपविसइ पोसहं करेइ, एगे अबीए विहरइ। इओ य पोक्खलिपभिई समणोवासया मिलिया, नेव संखे समणोवासए आगए, तए णं पोक्खली समणोवासए एवं वयासी—अच्छह णं तुब्भे वीसत्था अहण्णं सद्दावेमि, तए णं पोक्खली जेणेव संखस्स गिहं तेणेव अणुपविट्ठे, तए णं सा उप्पला

समणोवासिया पोक्खलिसमणोवासयं आगच्छंतं पासइ आसणाओ अब्भुट्ठेइ सत्तट्ठ पयाइं अणुगच्छइ वंदात, कहि णु साविए ! संखे समणोवासए?, तए णं सा एवं वयासी–पोसहसालाए, तए णं पोक्खली जेणेव पोसहसाला जेणेव संखसमणोवासए तेणेव उवागए, ईरियाए पडिक्कमइ गमणागमणं आलोएइ २ एवं वयासी–आगच्छह तुब्भे देवाणुप्पिए, तए णं संखे समणोवासए एवं वयासी–नो खलु मे कप्पइ तं विउलं असणपाणखाइमसाइमं आसाइत्तए, कप्पइ मे एगाणियस्स पोसहसालाए पोसहं पडिजागरमाणस्स विहरित्तए। तए णं से पोक्खली संखस्स वयणं सोच्चा निग्गए गिहाउ, जेणेव समणोवासया तेणेव उवागच्छइ,२ एवं वयासी–नो खलु संखे समणोवासए हव्वमागच्छइ, तं छंदेणं तुब्भे विउलं असणपाणखाइमसाइमं आसाएमाणा विहरह जाव विहरंति। तए णं संखस्स समणोवासयस्स पुव्वरत्तावरत्तकालसमयंसि सुदक्खुजागरियं जागरमाणस्स इमे एयारूवे अब्भत्थिए समुप्पज्जित्था–नो खलु मे कप्पइ पभाए समणं० अवंदित्ता पोसहं पारित्तएत्ति, तओ पभाए जाए जाव सावत्थीं नयरीं मज्झंमज्झेणं जेणेव कोट्ठए चेइए जेणेव समणे भयवं महावीरे तेणेव जाव पज्जुवासइ, तेणेव ते समणोवासया पभायसमयंसि ण्हाया कयवलिकम्मा जाव पज्जुवासंति, तए णं संखे समणोवासए समणं० वंदित्ता एवं वयासी–कोहवसट्टे णं भंते! जीवे किं वंधइ? किं चिणइ?, संखा! कोहवसट्टे णं जीवे आउयवज्जाओ सत्त कम्मपयडीओ सिढिलवंधणवद्धाओ धणियवद्धाओ करेइ एवंजावलोहवसट्टेणंति। तए णं ते समयोवासया समणं०वंदित्ता एवं वयासी–हिज्जो णं भंते! संखे समणोवासए हीलइ निंदइ गरहइ, तए णं समणे भयवं महावीरे एवं वयासी–मा णं अज्जो संखं समणोवासयं हीलेह निंदह,सखे णं समणोवासए पियधम्मे चेव दढधम्मे चेव सुदक्खुजागरियं जागरिए। तए णं गोयमे एवं वयासी–कइविहा णं भंते! जागरिया पण्णत्ता ?,गोयमा! तिविहा पण्णत्ता, तंजहा–बुद्धजागरिया

अबुद्धजागरिया सुदक्खुजागरिया, तए णं ते समणोवासया भीया तत्था तसिया उव्विग्गिया संजायभया, संखं समणोवासयं भुज्जो भुज्जो खामंति, एगट्ठा पसिणाइं पुच्छंति अट्ठाइया संता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया, भंते ! त्ति गोयमे समणं० वंदइ जाव एवं वयासी—संखे णं भंते ! समणोवासए मुंडे भविता अगाराओ अणगारियं पव्वइहिइ ?, गोयमा ! नो इणट्ठे समट्ठे, संखे णं समणोवासए बहूइं वासाइं समणोवासयपरियागं पाउणित्ता कालं किच्चा सोहम्मे कप्पे देवत्ताए उववज्जिहिइ, तओ चुओ महाविदेहे वासे सिज्झिहिइ बुज्झिहिइ मुच्चिहिइ सव्वदुक्खाणमंतं काहिइ। विस्तरतो भगवत्याम् । आनन्दकथानकं द्वितीयम्—

वाणियगामे आणंदगाहवइ रिद्धिवण्णणं तस्स। इड्ढिनिहाणपवित्थरच्च उच उकोडीहि वारस उ ॥ १ ॥ भयवं तत्थाग-च्छइ, दूइपलासम्मि चेइए वसइ। आणंदो य अणुव्वयगहणं कुणई तहिं सिग्घं ॥ २ ॥ कोल्लागसन्निवेसे तस्स अदूरम्मि तस्स सयणजणो। पोसहसाला तत्थण्णया उ आणंदगमणं तु ॥ ३ ॥ सिवनंदभारियाते सद्धिं भोगा सदारसंतोसं। तह्य परि-गहकोडी वारस हल पंच य सया उ ॥ ४ ॥ सगडसहस्सं वोहित्थमाणं ४०० गोवग्गमाण क्खिसिमाणं। उवभोगुव्वलणं खज्जगाइ-सागाण परिमाणं ॥ ५ ॥ पनरस वच्छर चिंता कुडुंवभारं च सयणवग्गं च। पुत्ते निक्खिविऊणं नाइकुलं जाइ पडिमट्ठा ॥ ६ ॥ कोल्लाए पडिमाओ समप्पिउं वीसमंमि वरिसंमि। संलेहणमाढवई ओहिन्नाणं च उप्पन्नं ॥ ७ ॥ सोहम्मं हिमवंतं समुद्दमज्झं च लोलुयं नरयं। भयवं तत्थ विहरइ नय सक्कइ तत्थ गंतूणं ॥८॥ भिक्खट्ठाए पविट्ठं गोयमसामिं च भणइ आणंदो। भयवं अणुग्गहेह जेण पवंदामि ते पाए ॥ ९ ॥ तं सोऊणं तत्थेव गोयमो गच्छए तओ सिग्घं। वंदण ओही पुच्छा परिमाणे विप्पडीवत्ती ॥१०॥ आलोएही सो गोयमेण आणंद तह य पडिभणई। किं तुज्झं किं मज्झं गोयम संका तओ जाया ॥ ११ ॥ भयवं गंतुं पुच्छइ

भयवं पडिभणइ तुज्झ अइयारो । पच्छा गंतुं आणंदखामणं गोयमो कुणइ ॥ १२ ॥ सव्वाउं पालित्ता वीसं वासाइं अणसणं काउं । अरुणाभे चउपलिओ महाविदेहम्मि सिज्झिहिइ ॥ १३ ॥ कथानक सविस्तरमुपासकदशांगे सप्तमे । तथा च—आणंद कामदेवो चुलणिपिया तहय चउत्थ सुरदेवो । चुल्लसय कुण्डगोलिय सरालपुत्ते महासयए ॥ १ ॥ नंदिणी विय सालईपिया दस अज्झयणा उवासगदसाणं । तत्थ य सावयचरिया पडिमा य दसासुयक्खंधे ॥ २ ॥ "अधुना यतनामाह—

**जहसत्तीए उ तवं करेइ ण्हाणाइ परिमियं चेव । दियबंभयार रत्तिं मियं च वावार संखेवे ॥ ११६ ॥**

'यथाशक्त्या' शक्त्यनुल्लंघनेन ननु 'तपः' आचाम्लादिरूपं 'करोति' विदधाति, 'स्नानादि परिमितं च' स्नानविलेपनताम्बूलादि परिमितं—परिमितप्रमाणेन यतनया च भूमिनिरीक्षणपरिमितोदकेन च, तथा दिवा ब्रह्मचारी रात्रौ मितं च प्रहरादिमानेन गण्डपीडापूतिनिष्कासनदृष्टान्तेन पौषधरहितोऽपि, तथा व्यापारस्यापि संक्षेपं करोति, परिमितमिति गाथार्थः॥ पौषधातिचारमाह—

**संथारे थंडिले विय अप्पडिलेहाऽपमज्जिए दो दो । संमं च अणणुपालणमइयारे पंच वज्जिज्जा ॥ ११७ ॥**

'संथारे' त्ति शय्यासंस्तारकौ गृहीतौ, शय्या—वसतिः संस्तारको—यत्र सुप्यते अथवा शय्या—सर्वाङ्गिकी, संस्तारकोऽर्द्धतृतीयहस्तमात्रः 'थंडिले' त्ति उच्चारप्रश्रवणभूमिः, उपलक्षणमेतत् स्वाध्यायभूम्यादेः, तत्र प्रत्युपेक्षणं दृष्ट्याऽवलोकनं प्रमार्जनं दण्डापुंछनवस्त्रान्तादिना तयोरकरणं न्यूनाधिककरणं वा तेनाप्यतिचारः, एते चत्वारोऽतिचाराः, स्थण्डिलभूमीनां संख्या सहस्रं चतुर्विंशत्यधिकं, ततो " बारस बारस तिन्नि य काइय उच्चारकालभूमीओ । अंतो बाहयं च अहियासि अणहियासी य पडिलेहे ॥ १ ॥ " सम्मं अणणुपालणं च पंचमोऽतिचारः, तत्र अननुपालनं कथं ?, पौषधिकश्चिन्तयति प्रभाते अशनपाना-

दिविषयमिदं करिष्यामि, शरीरसत्कारविषये स्नानविलेपनादि चिन्तयति, व्यापारेऽपीदं व्यवहारादिकं करिष्याम्येवं ब्रह्मचर्येऽपीति गाथार्थः ॥ भङ्गद्वारमाह—

**उवसग्गपरीसहदारुणेहिं कम्मोदएहिं नासिज्जा । रयणं व पोसहं खलु अइक्कमाईहिं दोसेहि ॥ ११८ ॥**

उपसर्गा दिव्यादयः षोडश, क्षुदादयो द्वाविंशतिः परीषहाः, तैर्दारुणैः—रौद्रैः चुल्लनिपिता इव कर्मोदयैर्वा भ्रंश कुर्यात् पौषधस्य, रत्नमिव, यथा प्रमत्तस्य रत्नं भ्रश्यति एवमिदमप्यतिक्रमादिभिर्दोषैः भ्रंशसमन्वितं भवतीति गाथार्थः ॥ भावनाद्वारमाह—

**उग्गं तप्पंति तवं सरीरसक्कारवज्जिया निच्चं । निव्वावारा तह बंभयारि जइणो नमंसामि ॥ ११९ ॥**

उग्रं 'तपः' मासोपवासादि 'तप्यंति' कुर्वंति, तथा 'शरीरसत्कारविवर्जिता नित्यं' शरीरसत्कारपरिहारिणः रागबुद्ध्या यावन्नित्यं—यावज्जीवं 'निर्व्यापाराः' सावद्यव्यापारपरिहारिणः, तथा 'ब्रह्मचारिणः' अष्टादशभेदभिन्नस्य नवगुप्तिसनाथस्य ब्रह्मचर्यस्यानुष्ठायिनो 'यतयः' साधवो नमस्यामि इति गाथार्थः ॥ उक्तं तृतीयं शिक्षाव्रतं, साम्प्रतं अतिथिसंविभागाख्यमाह, तत्रापि प्रथमद्वारम्—

**साहूणं जं दाणं नायागयकप्पमण्णपाणाणं । सो अतिहिसंविभागो सद्धासक्कारकमसहिओ ॥ १२० ॥**

'साधूनां' ज्ञानदर्शनचारित्रमोक्षसाधनानां तेषां यद्दानमनुग्रहबुद्ध्या, यतो दशविधं दानं पठ्यते क्वचित्—"आदान-गर्वसंग्रहभयानुकंपाऽथ लज्जया दानम् । उपकृतमधर्म्मदानं धर्म्मार्थं चाभयार्थं च ॥१॥" तच्च न्यायागतं न्यायोपात्तं, न त्वपहृत्य दानं, 'कल्प्यम्' आधाकर्म्मादिदोषरहितं "यत् स्वयमदुःखितं स्यात् न च परदुःखे निमित्तभूतमपि । केवलमुपग्रहकरं धर्मकृते

तद् भवेद्देयम् ॥ १ ॥ 'अन्नपानादि' आदिशब्दात् वस्त्रपात्रऔपधशय्यादि, अतिथिसंविभागः, "ज्ञानादिसमन्वितो भोजनकालोपस्थायी अतिथिर्भण्यते, तस्य संविभा० संविभागकरणं पुरःपश्चात्कर्म्मादिदोषरहितपिण्डप्रदानलक्षणमतिथिसंविभागः 'श्रद्धासत्कारक्रमसहितः' श्रद्धा भक्तिवहुमानरूपः सत्कारः—पादप्रमार्जनासनपादवन्दनादिकः क्रमः—यत्र प्रथमं ओदनादि दीयते 'तत् सहितः' तद्युक्त इति गाथार्थः " पइदिणं भत्तपाणेणं ओसहेण तहेवय। अणुग्गहेह-मे भयवं !, सावओ उ निमंतए ॥ १ ॥ गिहमागयस्स साहुस्स आसणं नियमसो उ दायव्वं। वंदिय सयं च वियरइ अहवा अण्णं दवावेइ ॥२॥ ठियओ चिट्ठए ताव, जाव सव्वं पयच्छियं। पुणोऽवि वंदणं काउं, भुंजई उ सयं गिही ॥ ३ ॥ एन्तस्सणुगच्छणया ठियस्स तह पज्जुवासणा भणिया। गच्छन्ताणुव्वयणं, एसो सुस्सूसणाविणओ ॥ ४ ॥ " भेदद्वारमाह—

**असणं पाणं तह वत्थपत्तभेसज्जसेज्जसंथारे। अतिहीण संविभागे भेया अह एवमाईया ॥ १२१ ॥**

अशनं—मोदकादि पानं—द्राक्षाक्षीरपानावश्रावणादि वस्त्र—कर्पासादिसंबंधि पात्रं—अलाब्वादि, भेषजं—त्रिकटुकादि, शय्या—वसतिः संस्तारकः—कंवल्यादिलक्षणः अतिथीनां संविभागे,—तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना। अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १ ॥ सर्वारम्भनिवृत्तस्तु, स्वाध्यायध्यानतत्परः। विरतः सर्वपापेभ्यो, दान्तात्मा ह्यतिथिर्भवेत् ॥ २ ॥ संयमगुणयुक्तेभ्यः षड्जीवनिकायरक्षणपरेभ्यः। पंचेन्द्रियविरतेभ्यः पंचसु समितिषु समितेभ्यः ॥ ३ ॥ समतृणमणिमुक्तेभ्यो यद् दानं दीयते सुपात्रेभ्यः। अक्षयमतुलमनन्तं तद् दान भवति धर्म्माय ॥ ४ ॥ उक्तं च—"विधिविशेषात् द्रव्यविशेषात् दातृविशेषात् पात्रविशेषाच्च फलविशेषः" इतरथा दंसणनाणचरित्तं तव विणयं जत्थ जत्तियं जाणे। जिणपन्नत्तं भत्तीए पूयए तं तहा-

भावं ॥ १ ॥ " इति विरुध्येत । अनुकम्पादान च न कदाचित् प्रतिषिद्धं, भेदा अथैवमादिका इति गाथार्थः ॥ तृतीयद्वारमाह—

**सोऊण अदिन्नेविहु कुरंगवरजुन्नसेट्ठिमाईणं । फलमिह निरंतरायस्स दाणबुद्धी सुहा होइ ॥ १२२ ॥**

श्रुत्वा, किं ?—अदत्तेऽप्याहारजाते फलं—स्वर्गापवर्गादिलक्षणं, केषां ?—कुरंगो—हरिणः वरजीर्णश्रेष्ठ्यादीनामिह आगामिनि '**निरन्तरायस्य**' निर्विघ्नस्य दानस्य फलमिह लोके परलोके च दानबुद्धिः '**शुभा**' शोभना भवतीति गाथार्थः ॥

कुरङ्गकथानकम्—

वासुदेवमृतकशरीरे परित्यक्ते बलदेवेन व्रतग्रहणे च कृते सति भिक्षामटति सत्येका वरतरुणी स्त्री उदकार्थमागता, बाल-रूपं रुदंतं घटभ्रान्त्या रज्जुं गलके दत्त्वा कूपके प्रक्षेप्तुमारब्ध। बलदेवरूपाक्षिप्ता सती, तच्च बलदेवेन दृष्ट्वा अहो मदीयं रूपं स्त्रीणां मोहहेतुरितिकृत्वा निवृत्तः अभिग्रहं गृहीतवान्—नगरे न प्रवेष्टव्यमाहारार्थं, सार्थादिभ्यो गृह्णाति, तत्र चाटव्यां तिष्ठतो बहवो जीवास्तद्दर्शनात् प्रतिबुद्धा यावदेको विस्मरः हरिणः सर्वं कालं तत्पार्श्वं न मुंचति, अन्यदा राजादेशेनाटव्यां रथकारो गंत्रीलोकादिसमन्वितः गृहीतशम्बलकः प्रासादनिमित्तं काष्ठानां प्रविष्टः, बलदेवोऽपि मासपारणके वसंतं देशं दृष्ट्वा भिक्षायै उपस्थितस्तेषां, तेन च रथकारेण बहुमानबुद्ध्या प्रतिलाभयितुमारब्धः, मृगेण चिंतितं—पुण्यभागऽयं मनुष्यजात्योऽहं तु तिर्य-ग्योनिकोऽस्येदृशी सामग्री मासपारणके जाता, एवंविधाध्यवसायस्यार्द्धच्छिन्नवाताहतवृक्षपतनात् त्रयोऽपि लोका नान्तरीभूता ब्रह्मलोके पंचमकल्पे बलदेवरथकारमृगा उत्पन्ना दानपात्राध्यवसायादिति ॥ वरजीर्णश्रेष्ठिकथानकम्—

वैशाली नाम नगरी, चेटकः परमश्रावको राजा, तस्मिन्नेव काले भगवान् चातुर्मासकाभिग्रहेण वर्षासमये चतुष्पथे कायो-

त्सर्गप्रतिमायां स्थितो, जीर्णश्रेष्ठिना दृष्टो, बहुमानश्च जातो, भोजनवेलायां नित्यं दानबुद्धिमनोरथो यावत् कार्तिकीपौर्णमास्यां चिंतितं यथाऽस्य मुनेरद्य मया पारणकं दातव्यं, रक्षपाला निकटवर्त्तिनो धृताः, भगवता च कायोत्सर्गः पारितः, अत्रान्तरे रक्षपालः श्रेष्ठिसमीपं गतः, स चौत्सुक्येनाध्यवसायकण्टकैः प्रवर्द्धमानैः यावदागच्छति तावद् भगवान् अभिनवश्रेष्ठिगृहे प्रविष्टः, तेन स-बहुमानं प्रतिलाभितः, पंचदिव्यप्रादुर्भावश्च, जीर्णश्रेष्ठीः तच्छ्रुत्वाऽवस्थितपरिणामः संजातः, अत्रान्तरे पार्श्वनाथसम्बन्धी केवली समागतो, लोकैः पृष्टो—भगवन् ! अस्यां नगर्यां कः पुण्यभाक् ?, केवलिनोक्तम्—जीर्णश्रेष्ठी, कथं ?, चतुरो मासान् अनेन पारितो, यदि पारणशब्दं नाश्रोष्यत् तदेदानीं केवलज्ञानमुदपादयिष्यदिति पुण्यभागिति संक्षेपार्थः ॥ दोषद्वारमाह—

साहूण वरं दाणं न देइ अह देइ कहव अमणुन्नं । नागसिरोविव कडुतुंबदाणओ भमइ संसारे ॥ १२३ ॥

साधूनां वरं—प्रधानं द्रव्यक्षेत्रकालप्रस्तावानुरूपं दानं न ददाति, अथवा ददाति ततोऽमनोज्ञं यदात्मनो न रोचते—न प्रतिभासते, तेन दानेन नागश्रीब्राह्मणीवद्दाता भ्रमति संसारे, कटुकालाब्वादिदानादिवदिति गाथार्थः ॥ भावार्थः कथानकगम्यस्तच्चेदम्—

चंपाए सोममाहण नागसिरी भारिया पुणो अण्णे । भायारा कमभोयण नागसिरी अलाउयं सिद्धं ॥ १ ॥ तं परियंती सन्ती धम्मरुई मासपारण पविट्ठो । गहियं गुरूण दंसइ धम्मघोसेहिं तं नायं ॥२॥ थंडिलभूमी पत्तो अंगुलि लूहइ य कीडिगा वहूया । मुइआ दट्ठुं आलोय भुंजणं अणसणं सिद्धो ॥ ३ ॥ आयरियकहणथेरेहिं पुच्छिए माहणाण सुणणाइ । निद्धाडिय रोगा से मयावि छट्ठीए पुहवीए ॥४॥ पइपुढवि दान्नि वारे एवं गोसालव्व संसारं । भमिउमणंतं चंपे सुकुमाला इत्थिया जाया ॥ ५ ॥ सागरओ परिणेई करवत्ताईअफास अणुभवणं । अण्णम्मि य सेज्जाए कुण निग्गच्छइ घराओवि ॥ ६ ॥ मायरपेसिय-

चेडी दट्ठुं सुकुमालिय झियायतें । सव्वं साहइ पिउणो जाव य दमगोवि परिचयइ ॥ ७ ॥ जो जो पुरिसो परिणेइ सो सो तं चयइ नेच्छए भोत्तुं । तत्तो वेरग्गगया गोवालियमयहरिसगासे ॥८॥ पव्वज्जं गिण्हित्ता आयावणमाइयं तवमुयारं । काउं मोकलिया सा जाया कम्मोदएण तओ ॥९॥ हत्थे पाए कच्छाइ धोवए वत्थमाइयमकाले । अज्जाहिं मयहरिया भणिया वारेह र(ण)त्थाओ ॥ १० ॥ मयहरिनिवारिया सा जुयवसहिं देवदत्तवसहिं च । दट्ठुं नियाणकरण पंचहिं पुरिसेहिं मम जोगो ॥११॥ ईसाणे पण-पण्णं पलिया परिभुंजिऊण कपिल्ले । दोवइ दारिय जाया सयवरामडओ तहियं ॥ १२ ॥ तत्थ य जुहिट्ठिलाई कुंतीपुत्ता उ पंडवा पंच । हत्थिणपुराउ आया वरमाला तेसु पक्खित्ता ॥ १३ ॥ दोवय तह अंतेउर नारयरिसिआगमो अनुट्ठाणं । नारयपओस पउमो धायइसंडमि भरहद्धे ॥१४॥ अंतेउरियसहस्स अपुव्वकहणेण दोवईरूवं । देवाराहण अणयण जुहिट्ठिलापासओ सिग्घ ॥१५॥ उज्जाणम्मी राया गच्छइ छम्मास अवहिकरण च । तत्थ पभाइ जुहिट्ठिल कुंतीमाईण कहणाइ ॥१६॥ तो गच्छइ य कुंती बारवई वासुदेवपासम्मि । तेण य नारयपुच्छण दोवइसरिसा अवरकंके ॥ १७ ॥ नारी दिट्ठा उ मए गयाउ खिप्पं तु तस्स ठाणाओ । पंडवकहणं चलिया छावि जणा सुट्ठियागमणं ॥ १८ ॥ नीया परकूलम्मी दूयं पेसेइ आगओ सोवि । पांडवजिणण कण्हस्स आगमो संखनाएण ॥१९॥ तत्थ तिभागो भग्गो धणुहनिनाएण तह तिभागो य । नगरीरोहे अट्टालभंजणं सीहनादेण ॥२०॥ तत्तो दोवइपुच्छण भज्जइ पणमइ य वच्छला सा उ । ताहे कण्हसमप्पण मुणिसुव्वय पुच्छणं कविलो ॥२१॥ चंपानयरीए ठिय नय मेलो होइ वासुदेवाण । ताहे समुद्दि संखाण मेलणं धयचरं दिट्ठं ॥२२॥ मुट्ठियलवणाहिव तह विसज्जणे गगनावतरणेणं ॥ कोवो पंडवनिस्सारणं तु फुप्फासमागमणं ॥२३॥ पड्डुमहुराए ठाण हत्थिणनयराओ निग्गमो तेसिं । जाओ य पंडुसेणो कालेणं थेरआगमणं ॥२४॥

पव्वाइया तया ते दोवइ देवी य अज्जया जाया । चोदसपुव्वअहिज्जण नेमिस्स उ वंदया चलिया ॥ २५ ॥ मासखमणपारणए हत्थिकप्पम्मि भमडण चउण्हं । सुणणं निव्वाणम्मी गओ य नेमी तओ तेहिं ॥ २६ ॥ भत्तं परिट्ठवेत्ता अणसण काऊण तेऽवि सेत्तुंजे । सिद्धिगय कोडिसहिया विमलगिरिम्मी महाभागा ॥ २७॥ दोवइ अज्जावि तहा एक्कारसअंगधारिणी होउं । बंभे कप्पे दससागरठिईया इहायाया ॥२८॥ तत्तो महाविदेहे सामण्णं निचल तहा काउं । सिज्झिहिइ खविय कम्मा एवं संखेवओ चरियं ॥ २९ ॥ इइ दोवइभवभमणं नाउ साहूण थेवदाणंमी ( पि ) । सुंदरगं दायव्वं भावेणं बुद्धिमंतेहिं ॥ ३० ॥ नायाधम्मकहाए वित्थरओ नेअव्वो ॥ गुणद्वारमाह—

जं जोग्गं थेवंपिहु तं तेसिं देइ धम्मसड्ढाए । कयपुन्नसालिभद्दो व सावया ते सुही होंति ॥ १२४ ॥

यद्योग्यं साधूनां प्रस्तावोचितं सुभिक्षदुर्भिक्षाध्वानग्लानाद्यवस्थायोग्यं स्तोकमपि तत्तेषां साधूनां ददाति धर्मश्रद्धया, उक्तंच—" देशे काले कल्पं श्रद्धायुक्तेन शुद्धमनसा च । सत्कृत्य च दातव्यं दानं प्रयतात्मना सद्भ्यः ॥ १ ॥ " कृतपुण्यकः शालिभद्रश्च दृष्टान्तद्वयं, दार्ष्टान्तिकयोजना च इयं—ये श्रावकाः सत्पात्रे दानं प्रयच्छंति ते सुखिनो भवन्तीति गाथार्थः ॥

## कृतपुण्यकथानकम्—?

विजयपुरे पत्तने विजयसेनो राजा, तत्र धनवसुः श्रेष्ठी.पद्मश्री भार्या वसुदत्तः पुत्रः, मृतः श्रेष्ठी, धनं च क्षीणं, ततो माता वसुदत्तकं बालकं वच्छपालकं गृहीत्वा श्रीपुरे गता, वत्सचारणाय गतेन तेन बाह्यतो महामुनिर्दृष्टो, वंदितो भक्त्या, तस्मिंश्च दिने नगरोत्सवः, मातरं याचितवान् पायसं, ततः सा रोदितुमारब्धा भर्तृलक्ष्मीं स्मृत्वा, ततः प्रातिवेश्मिकस्त्रीभिः रुदितशब्दं श्रुत्वा

पृष्टा—किमर्थं त्वं रोदिपि ?, तयोक्तम्—आत्मीयभाग्यानि, ततस्तया पुत्रयाचनकारणं कथितं, ताभिर्दुग्धतन्दुलगुडादिकं प्रतिपन्नं,
वसुदत्तस्य त्वया मनोरथाः प्रभाते पूरणीयाः, स च प्रहरद्वयवेलायां गृहमागतः, उपविष्टो भोजनाय, भृतं भाजनं पायसस्य,
अत्रान्तरे मुनिर्मासपारणके प्रविष्टः, चिंतितं वसुदत्तेन—अस्ति ममापि पुण्यभाजनता तेनेदृशी सामग्री संजाता, साम्प्रतं प्रति-
लाभयाम्येनं पायसेन, उत्थितः स्थालं गृहीत्वा, त्रिभागो दत्तः, पुनश्चिन्तितम्—अतिस्तोकं, द्वितीयत्रिभागो दत्तः, अपरेण कदन्नेन
पतितेन विनाशं यास्यति, तृतीयत्रिभागोऽपि दत्तो, जनन्याऽवरं क्षीरान्नं दत्तं, प्रभूतं स्निग्धं भुक्तं, पुनर्वत्सानां चरणार्थमटव्यां
गतः, पुनर्वृष्टिभयेन वत्सरूपाणि दिशोदिशं गतानि च यावन्मीलयति तावदुत्सूरीभूतं, नकरद्वाराणि स्थगितानि, बहिःसुप्तस्य स्निग्धा-
हारभुक्तशीतवातादिभिर्विसूचिका संजाता, मृतश्च, ततो राजगृहे नगरे धनश्रेष्ठिभार्यायाः कुवलयाभिधानायाः अपुत्राया उपया-
चितखिन्नाया वसुदत्तजावो मृत्वा गर्भे उत्पन्नो, द्वादशकदिने कृतपुण्यक इति नाम कृतं, अष्टवर्षः कलां ग्राहितः, ततो धनश्रे-
ष्ठिना कान्तिमतीं भार्यामुद्वाहितः, द्वादशवर्षे माधवसेनागणिकागृहं प्रविष्टः, अष्टोत्तरशतयुगपुष्पादिकं च सर्वं मात्रा दासचेटी-
हस्ते प्रेषितं यावद् द्वादश वर्षाणि, लोकान्तरीभूतेषु मातापितृषु कान्तिमत्यापि भार्यया लोटकीकणकसमन्वितं प्रेषितमाभरण,
पाइकया च पूजयित्वा द्रव्येण सह प्रेषितं, उक्ता च माधवसेना—निष्कास्यतां, ततोऽपमानिता गृहं गतः, मातापित्रादिमरणं ज्ञातं,
दिनानि कतिचित् स्थित्वा फलस्थापनं कान्तिमत्याः कृत्वा पोचि (वोहि) स्थकेन सार्धं प्रवृत्तः परकूले गंतुं, विकालवेलायां गृहात्
सार्थासन्ने देवकुलिकायाः खट्वायां सुप्तः, तत्रैव राजगृहे सूरः श्रेष्ठी मातरं भार्याचतुष्टयसमन्वितां मुक्त्वा दिग्यात्रायां गतो, मृतश्च,
लेखबद्धात् मातुर्वार्ता प्राप्ता, तया तासामेकान्ते वार्त्ता कथिता, उक्ताश्च यूयमपुत्रा द्रव्यं राजकुले यास्यति, ततोऽत्र प्रस्तावे

कश्चित् पुरुषः पुत्रार्थमानयनीयो, न च दोषः तस्यामवस्थायां, युधिष्ठिरादिदृष्टान्ताद् , यतः कुन्त्या धर्मेण युधिष्ठिरः वायुना भीम उत्पादितः इन्द्रेणार्जुन इति लोके श्रुतिः, प्रतिपन्नं ताभिः, निर्गता गृहात् यावत् सार्थासन्ने दृष्टः कृतपुण्यको, नीतो गृहं, रुदितं च, प्रासादे आरोपितो, द्वादश वर्षाणि गतानि, पुत्रभाण्डानि संजातानि, ततस्तया पुनरप्युक्तम्—निष्कास्यतां, ततस्ताभिः सा उक्ता-शंबलं किंचित् क्रियतां, प्रतिपन्नं तया, मोदकादीनां मध्ये चन्द्रकान्तादीनि रत्नानि प्रक्षिप्तानि, रजन्यां निष्कासितः, तस्मिन्नेव स्थाने मुक्तः, सार्थोऽपि तस्मिन्नेव दिने समायातः, कान्तिमती प्रभाते गता, यावद् दृष्टः, शोभनवस्त्रादिसामग्रीयुक्तः गृहं गतः, कृतं वर्द्धापनकम्, अत्रान्तरे लेखशालायाः पुत्रः समायातः, पतितः पादयोः, तेन च भोजनं याचितं, कान्तिमत्या च शम्बलकमध्यान्मोदका दत्तः, यावन्मणिं पश्यति, कुल्लरिकापणे दत्तः, सेचनकहस्ती तंतुकेन जलमध्ये गृहीतः, पटहको दत्तः, कुल्लरकेन जलकान्तमणिना मोचितः, राज्ञा पृष्टः—कथं तव एषः?, तेन कथितं—कृतपुण्यकपुत्रहस्तात्, कृतपुण्यकमाहूय दुहिता दत्ता राज्येन सह, अन्यदा अभयकुमारेण पृष्टः—क्व देशान्तरे गतः?, ततः कथितः सर्वोऽपि वृत्तान्तः, न च निर्गमप्रवेशं जानामि, ततोऽभयकुमारेण चिन्तितं—बुद्ध्या वयमपि जिताः, ततो देवकुलं कारापितं, कृतपुण्यकप्रतिमा च, प्रतिष्ठाऽनन्तरं पटहको दत्तः-स्त्रीभिः सह पुत्रादिभिर्देवपूजनं कर्त्तव्यमित्यादेशः, प्रभाते सा चतसृभिर्वधूभिः सह पुत्रादिभिः समागता, दृष्ट्वा कथितं कृतपुण्यकेन यथा एतास्ताः, ते च डिम्भका उत्संगे कृतपुण्यकलेप्यकस्यारूढाः, ततोऽभयकुमारेणाह्वायिताः, कारागृहादिभयं दर्शयित्वा चतस्रोऽपि वध्वो दत्ताः, सप्तभिर्भार्याभिः समन्विता भुनक्ति भोगान् । अन्यदा भगवानागतो गुणशीलचैत्येऽभयकुमारकृतपुण्यकाभ्यां पृष्टः—कस्य पुण्यस्य फलं, ? ततः कथितं भगवता क्षीरान्नदानपात्रिकाभागादिफलं, व्यवच्छिन्नाध्यवसायस्य व्यवच्छिन्नं फलमित्यादि ॥

शालि भद्रकथानकम्-मगधदेशे शालिग्रामे उच्छन्नवंशो धन्यावत्सपाल्याः पुत्रः संगमकः, स च इन्द्रमहोत्सवे गृहे गृहे पायसं भुज्यमानं दृष्ट्वा जननीं प्रार्थितवान्, सा च रोदितुमारब्धा, तता निकटवर्त्तिनीभिः स्त्रीभिरनुकंपया दत्त क्षीरादि, परमान्नमुपसंस्कृत्य दत्त, अत्रान्तरे मासक्षपणके साधुः प्रविष्टः, महता प्रमोदेन कृतार्थमात्मानमभिमन्यमानः प्रतिलाभितवान्, रात्रौ स्निग्धानुचितप्रवर्षणेन विसूचिका संजाता, राजगृहे गोभद्रश्रेष्ठिपुत्रः भद्राया उदरे शालिस्वप्नसूचित उत्पन्नः संगम-दारकः, द्वादशाहदिने कृतं शालिभद्र इति नाम, मुनिदानफलकुसुमाल्लोके प्रसिद्धिं गतः, तत्रैव द्वात्रिंशद्भिः कन्यकाभिः स्वभवने एव स्थितः पाणी ग्राहितः शालिभद्रः, गोभद्रश्रेष्ठ्यपि श्रामण्यं कृत्वा अनशनपंचनमस्कारादिपूर्वकं कालं कृत्वा वैमानिकेषूत्पन्नः, ज्ञा-तपूर्वभववृत्तान्तः कृतपुस्तकवाचनसिद्धायतनगमनादित्रिदशकर्त्तव्यः ततः शालिभद्रस्य पुण्यानुभावार्जितकर्मोदयस्य सम्पादयति सवधूकस्य सर्वमुपभोगपरिभोगादिकं देवभोग, उक्तं च-" जम्मंतर महरिसिदिन्नदाणपुन्नाणुभावओ तियसो। संपाडेइ जहिच्छं कामे सह तस्स वहुयाहिं ॥ १ ॥ " अन्यदा कम्बलरत्नचट्टाः श्रेणिकस्योपस्थिता न गृहीतानि, ततो भद्रागृहे गतानां सर्वाणि गृहीतानि, चेल्लणाप्रेरितेन च पुरुषाः श्रेणिकेन प्रेषिताः, भद्रया चोक्त-यथा पादलूहनकानि खण्डयित्वा शालिभद्रवधूनां कृतानीति, राज्ञोक्तं-शालिभद्रं पश्यामि यस्येदृशी ऋद्धिः, भद्रया चोक्तम्-देव ! न दृष्टं शालिभद्रेण चन्द्रादित्यादि दिव्यप्रासादस्थितेन, राज्ञोक्तं-अहमेवागच्छामि, ततो द्वितीयदिने राजभवनादारभ्य स्वगृहं यावदाच्छादितं गगनं वस्त्रादिना कृतं, राजा भद्रागृहमागतः, चतुर्थभूमिकायामासनादि कृ प्रतिपत्तिं कृत्वा उपरितले भद्रा गता, शालिभद्रं विज्ञापितवती-पुत्र ! श्रेणिकः त्वां द्रष्टुमिच्छति, तेनोक्तं मूल्यं कृत्वा गृहाण, न पण्यमसौ, किन्तु तवाशेषलोकस्य च स्वामी, श्रुत्वा विषण्णः, अस्माकमप्यपरः स्वामी ?, तत आगतः,

श्रेणिकेनाप्यादरेणोत्संगे स्थापितः, ततो ग्लानवदनं दृष्ट्वा भद्रयोक्तं—देव ! प्रेष्यतां, गन्धं न सहिता युष्मदीयं, देवगन्धवासितत्वात्, ततः प्रेषितः, श्रेणिकं च भोजनाय निमंत्रितवती, यावद्वाप्यां स्नानं कुर्वतो मुद्रारत्नं पतितमुदके, निष्कासिते अंगारसदृशं दृष्टं, किमेतत् ?, कथितं—देव ! निर्माल्यं वधूसंबंधि, श्रेणिकेन चिंतितं—नास्त्यसाध्यं पुण्यानां, गतो राजा, तेनैव कालेन च धर्म्मघोषाचार्यान्तिके धर्म्मं श्रुत्वा प्रव्रज्यापरिणामोऽभूत्, ततो वर्द्धमानस्वामी विहरन्नागतो, महाविभूत्या शालिभद्रः प्रव्रजितो, भगवता सह विजहार। अन्यदा पुनरप्यागतो भगवान्, मासक्षपणपारणके प्रविशन् भगवता उक्तो—माता पारयिष्यति, भद्रागृहं गतः, न किंचित् परिज्ञातः, ततो निर्गच्छन् पूर्वभवमाता धन्याभिधाना, तया दध्ना प्रतिलाभितः, आगतो भगवत्समीपम्, उक्तवान्—न केनचिदहं परिज्ञातः, भगवतोक्तं—पूर्वभवजनन्या प्रतिलाभितः, ततः स्मरणमुत्पन्नं, तदेव दधि पारयित्वा अनशनं पादपोपगमनं कृत्वा पंचनमस्कारपूर्वकं कालं कृत्वा सर्वार्थसिद्धे महाविमाने त्रयस्त्रिंशत्सागरोपमस्थितिको देवो भूत्वा तस्माच्च्युत्वा महाविदेहे सेत्स्यतीति ॥ यतनाद्वारमाह—

जं साहूण न दिन्नं कहंचि तं सावया न भुंजंति। पत्ते भोयणसमए दारस्सवलोयणं कुज्जा ॥ १२५ ॥

यत् कल्पनीयं साधूनां न दत्तं तच्छ्रावका यथावस्थितनामानः—श्रवंति यस्य पापानि, पूर्वबद्धान्यनेकशः। आवृतश्च व्रतैर्नित्यं, श्रावकः सोऽभिधीयते ॥ १ ॥ ' न भुंजति नाभ्यवहरन्ति, उक्तंच—"पढमं जईण दाऊण अप्पणा पणमिऊण पारेइ। असई य सुविहियाणं भुंजइ य कयदिसालोओ ॥१॥ साहूण कप्पणिज्जं जं नवि दिण्णं कहिंपि किंचि तहिं। धीरा जहुत्तकारी सुसावगा तं न भुंजंति ॥ २ ॥ प्राप्ते भोजनकाले साधुप्रमावे द्वारदेशे ह्यवलोकनं कुर्यात्, प्राप्तायां भोजनवेलायां एतच्चिंतयति—यदि केचन

धर्मबान्धवा अस्यां वेलायामागच्छंति ततो मम निर्जरणा भवतीति गाथार्थः ॥ अतिचारद्वारमाह—

**सच्चित्ते निक्खिवणं पिहणं ववएस मच्छरं चेव । कालाइक्कमदाणं अइयारे पंच वज्जिज्जा ॥ १२६ ॥**

सचित्ते सचित्तस्योपरि निक्षेपणमदेयबुद्ध्यान्नादेरिति गम्यते १, तथा पिधानं—स्थगनं सचित्तेन फलादिना २, तथा व्यपदेशः
यथा परसत्कमिदं यद्भवता प्रकटमन्नादि दृष्टं, अथवा परव्यपदेशेन मातुः पुण्यं मदीयदानेन भवत्विति ३, तथा मत्सरेणा-
प्यतिचारः, अपरेणेदं दत्तं किमहमस्मादपि कृपणः दीनो वा, मात्सर्यं वा मार्गितः करोति ४, कालातिक्रमदानं न्यूनमधिकं
वा कालं ज्ञात्वा अतिथिसंविभागाय निमंत्रयति, किं तेन गृहीतेन?, “काले दिन्नस्स पहेणयस्स य अग्घो न तीरए काउं ।
तस्सेवाकालपणामियस्स गेण्हंतया नत्थि ॥ १ ॥ सत्पात्रं महती श्रद्धा, काले देयं यथोचितम् । धर्मसाधनसामग्री, नाल्पपुण्यै-
रवाप्यते ॥ २ ॥” इति गाथार्थः ॥ भङ्गद्वारमाह—

**दाणंतरायदोसा न देइ दिज्जंतयं च वारेइ । दिन्ने वा परितप्पइ किविणत्ताओ भवे भंगो ॥ १२७ ॥**

दानान्तरायदोषात् सदपि न ददाति, कपिलब्राह्मणीश्रेणिकधात्रीवत् पात्रे सत्यपि दानं स्वयं, तथा दीयमानमपि वारयति
कृपणत्वादेव, दत्तेऽपि च परितप्यते कृपणत्वादेव, ततो भङ्गो भवतीति गाथार्थः ॥ भावनाद्वारमाह—

**धन्ना य पुन्नमंता तेसिं सहलं च जीवियं लोए । सेज्जंसो इव दाणं भत्तीए दिंति पत्तेसु ॥ १२८ ॥**

‘धन्याः’ धनादिमन्तः ‘पुण्यवन्तः’ सुखादिमन्तस्तेषां सफलं च जीवितं ‘लोके’ मनुष्यलोके जीवितं श्लाघ्यते,
‘श्रेयांस इव’ बाहुबलिपौत्रक इव दानं भक्त्या ये ‘ददति’ प्रयच्छंति पात्रेषु ते धन्या इति गाथार्थः ॥ श्रेयांसक-
दृष्टान्तमाह—

यानकम्—हस्तिनापुरे नगरे सोमप्रभस्य राज्ञः पुत्रः श्रेयांसो, भगवांश्च कन्यकारत्नादिभिश्च निमंत्र्यमाणः प्राप्तः, श्रेयांसेन मत्तावलंबस्थितेन दृष्टः वर्षपारणके, ततश्चिंतितं—क मया एतद्रूपं दृष्टपूर्वं?, ईहादिकं कुर्वतः जातिस्मरणमुत्पन्नं अष्टभविकम्, अत्रान्तरे इक्षुघटसमन्विताः पुरुषाः समायाताः, भगवाँस्तत्रैव प्रविष्टः, प्रतिलाभितो बहुमानेन इक्षुरसेन, रत्नवृष्टिरर्द्धत्रयोदश कोट्यः पतिता वसुधारा, देवागमनं, जयजयशब्दो, दशार्द्धवर्णकुसुमवृष्टिः, लोकागमनं च संजातं, कथं त्वया ज्ञातं यथा भगवत आहारो दीयते?, ततः श्रेयांसेनाष्टभविकं भगवता सहात्मीयं विहरणं कथितं, अहं तृतीयभवे भगवतः सारथिरासं, तत्र मया वैरसेनः तीर्थंकरलिङ्गेन दृष्टो, वज्रनाभेन चक्रवर्त्तिना सह प्रव्रजितः, सर्वार्थे उत्पन्नः, अत्र पुनर्बाहुबलीपौत्रको जातोऽतो मया ज्ञातमेवं दीयते, तत्र स्थाने रत्नमयं पीठं कारितं, त्रिसन्ध्यं पूजां चकार, लोकानां च कथितं, किमेतद्?, आदिकरपीठं, यत्र यत्र भगवतः पारणकमासीत् तत्र तत्र आदिकरपीठं, कालेन गच्छता जिनान्तरे आइच्चपेढं, एवमाहारदानेन श्रेयांसस्य मोक्षावाप्तिः संपन्नेति संक्षेपकथानकं, विस्तरेणोपदेशमालादिष्विति। उक्तानि शिक्षापदव्रतानि, तत्परिसमाप्तौ समाप्तानि द्वादश व्रतानीति। साम्प्रतं संलेखनां नवभेदामाह—

**जिणभवणाइसु संथारदिक्खनिज्जामयाओ अडयाला। पियधम्माइसमेया चउरंगाराहओ मरणे ॥ १२९ ॥**

तत्र मरणं श्रावकेण क कर्त्तव्यं?, जिनभवनादिषु, उक्तंच—"अर्हतां जन्मनिर्वाणे, चैत्यस्थाने प्रतिश्रये। तदभावे गृहे चैवारण्ये जंतुविवर्जिते ॥ १ ॥" आलोचनाक्षामणादि कृत्वा, ततः संस्तारकदीक्षा अनशनं वा विधेयं, तत एते निर्यामका अष्टचत्वारिंशत् "पासत्थोसन्नकुसीलवणपरिवज्जिया उ गुणजुत्ता। पियधम्मऽवज्जभीरू अडयालीसं तु निज्जवगा ॥ २ ॥ उन्वत्त १

दार २ संथार ३ कहग ४ वाइं ५ अ अग्गदारम्मि ६ । भत्ते ७ पाण ८ वियारे ९–१० करग ११ दिसा १२ जे समत्था य ॥२॥" उक्त च–" एगो जइ निज्जवओ अप्पा चत्तो परो पवयणं च ॥ 'पियधम्माइसमेया' इति प्रियधर्म्मदृढधर्म्मादियुक्ताः अनया सामग्र्या म्रियमाणश्चतुरंगाराधको–मानुषत्वश्रुतिश्रद्धासंयमवीर्यचतुरंगाराधको मरणकाले भवतीति गाथार्थः ॥ भेदद्वारमाह–

**मरणं सत्तरसविहं नाउं तत्थंतिमाइं मरणाइं । पायव इंगिणिमरणं भत्तपरिण्णं च कायव्वं ॥ १३० ॥**

'**मरण**' दशविधप्राणत्यागलक्षण सप्तदेशभेदभिन्न, उक्त च–" आवीचि ओहियंतिय वलायमरणं वसट्टमरण च । अंतोसल्ल तब्भव बाल तह पडियं मीसं ॥१॥ छउमत्थमरण केवलि वेहाणस गिद्धपिट्ठमरणे या । मरण भत्तपरिन्ना इंगिणि पाओवगमणं च ॥ २ ॥ " ततः तेषां सप्तदशानां मध्ये अन्त्यानि मरणानि त्रीणि कर्त्तव्यानि, पादपोपगमनं इङ्गिनीमरणं भक्तपरिज्ञा च, तत्र पादपोपगमन पादपवदुन्मेषनिमेषादिरहित निर्हारिमं अनिर्हारिम च, इंगिनीमरण च इगिनिप्रदेशे स्वयमुत्थानादिचेष्टां करोति, न परेण किंचित् कारयति, भक्तपरिज्ञा तु त्रिविधचतुर्विधआहारादिलक्षणा स्वतः परतः परिकर्म्मसमन्विता धृतिसंहननादिरहितस्यापीति गाथार्थः ॥ तृतीयद्वारमाह—

**संलेहणाइ पुव्वं वियडण उच्चारणं तह वयाणं । तिविहं चउव्विहं वा आहारं वोसिरे सव्वं ॥ १३१ ॥**

संलेखना–मरणकालावस्थायिनी द्वादशसंवत्सरिका, तथा चोक्तम्–" चत्तारि विचित्ताइं विगईनिज्जूहियाइं चत्तारि । संवच्छरे य दोण्णि उ एगंतरियं च आयामं ॥ १ ॥" इत्यादि, "पच्छिल्लहायणेसुं चउरे वारे उ तेल्लगंडूसे । निसिरे खेल्लगमल्लम्मि किं कारण गल्लधरणं तु ? ॥ १ ॥ लुक्खत्ता मुहजन्तं मा हु खुहेज्जत्ति तेण धारेइ । मा हु नमोकारस्सा अपच्चलो सो

ह्वेज्ज त्ति ॥ २ ॥" तत् पूर्वं, तथा विकटना–आलोचना, तथा व्रतानामुच्चारणं, पूर्वमनशनं त्रिविधं चतुर्विधं वा प्रतिपद्य आहारं व्युत्सृजेत् सर्वं, तथा सूर्यापराह्णसमये कृत्वा अनशनक्रियां ततः पश्चात् गत्वा जिनायतनसाधुसमीपे अथवा स्वगृहे, ततः भावनाराधनानमस्कारनिर्यामकादिसामग्रीयुक्तस्तिष्ठति इति गाथार्थः ॥ दोषद्वारमाह—

**बालमरणा हि जीवो सनियाणो दुक्खसागरमपारं । पावइ जह संभूई पंडरअज्जा व दिट्ठंतो ॥ १३२ ॥**

'बालमरणैः' जलज्वलनप्रवेशादिभिः द्वादशभिः 'जीवः' प्राणी 'सनिदानः' कृतनिदानः जन्मान्तरे कोणिकवत् दुःखसागरमपारं प्राप्नोति, दुक्खानुगतं संसारं लभत इति वाच्यं, शेषदृष्टान्तमाह–यथा संभूतिः पंडरार्या वेति गाथासंक्षेपार्थः ॥ व्यासार्थः कथानकगम्यस्तच्चेदम्—

साकेतनगरस्वामिचन्द्रावतंसकपुत्रः मुनिचन्द्रनामा सागराचार्यसमीपे प्रव्रजितः संजातसंवेगः, अन्यदा मुनिचन्द्रसाधुः सार्थभ्रष्टोऽटव्यां चतुर्भिर्गोपालदारकैः क्षुत्तृडादिबाधितो दृष्टः, प्रतिलाभितो, मार्गे प्रापितः, सम्यक्त्वलाभः, द्वौ जुगुप्सां कृत्वा देवलोकाच्च्युतौ दशार्णपुरे दासभावेनोत्पन्नौ, तत्र च वज्राग्निना दग्धौ मृतौ मृगभावेन कालिंजरे नगे उत्पन्नौ, लुब्धेन मारितौ, ततो हंसौ गंगायां, तत्रापि लुब्धकमारितौ वाणारस्यां भूतदिन्नमातंगगृहे चित्रसंभूतिनामानौ दारकौ, तत्रैव शंखराज्ञः मंत्री नमुचीनामा ब्राह्मणः कथंचित् विनष्टः स्त्रीविषये, राज्ञा मारणाय समर्पितोऽभूत् दिन्नमातंगस्य, तेन चोक्तं–मदीयपुत्रौ यदि कलां ग्राहयसि ततः रक्षामि, तेन च मृत्युभयभीतेन प्रतिपन्नं, कलां ग्राहितौ, स च नमुचिर्ब्राह्मणः भूतदिन्नभार्यायामासक्तो, ज्ञात्वा मातङ्गेन विनाशितुमारब्धः, तच्च पुत्रैस्तु गुरुरिति कृत्वा जानापितो, नष्टो हस्तिनागपुरं गतः, तत्र च सनत्कुमारचक्रवर्त्तिमंत्रित्वेन

स्थितः, तौ च कलासमन्वितावपि लोकेन न वहु मन्यते सहवासदोषात्—" इह सहवासदोसो जं कोरइ परिहवोऽरविंदस्स । लच्छीएँ जं धरिज्जइ साल्हूरो तं समारुहइ ॥ १ ॥ " ततो निर्गतौ अभिमानात् स्वदेशाच्चित्रसंभूतिनामानौ दारकौ, अन्यदा सुस्थिताचार्यं प्राप्य गृहीता प्रव्रज्या, मातंगमहर्षी जातौ, पर्यन्ते प्राप्तौ हस्तिनपुरं, मासक्षपणपारणके संभूतिः प्रविष्टः भिक्षार्थं, दृष्टो नमुचिमंत्रिणा, खलीकर्तुमारब्धो, निर्गच्छमानोऽपि न मुंचति, ततः क्रुद्धः धूमं मुक्तवान्, अंधारीभूता दिशः, सनत्कुमारेण पृष्टः—किमिदमकाण्डे धूमोत्थानं?, केनचिद्विदितवृत्तान्तेन कथितं, ततो राजा सान्तःपुरः शीघ्रमागत्य पादयोः पतितः, ततः स्त्रीरत्नकेशाः पादयोर्लग्नाः, सुकुमारतामनुभूय कृतं निदानं, ममाप्येवं स्त्रीरत्नं जन्मान्तरे भूयात्, चित्रसाधुरपि अत्रान्तरे धूमं दृष्ट्वा आगतः कष्टेनोपशामितः, ततस्तदैवानशनं कृत्वा मृतौ देवेषु वैमानिकेषूत्पन्नौ, ततश्च्युतः संभूतिजीवः काम्पिल्यपुरे राज्ञ्याश्चुलन्या भार्याया उदरे चतुर्दशस्वप्नसूचित उत्पन्नः, ब्रह्मदत्तचक्रवर्त्ती संजातः, चुलन्या मातुर्दोषेण मंडलभ्रमणं कश्चित् कालं कृत्वा ततश्चतुर्दशरत्नसंयुक्तश्चक्रवर्त्ती संजातः, जातिस्मरः, पटहकदानं, श्लोकार्द्धं च—'आस्व दासौ मृगौ हंसौ, मातंगावमरौ तथा "। सोऽपि चित्रजीवः पुरिमतालपुरे इभ्य उत्पन्नः, लक्ष्मीं परित्यज्य प्रव्रजितः, तत्रैव काम्पिल्यपुरे विहरन् समायातः, उद्यानस्थ आरघट्टिकेन पठ्यमानं श्लोकार्द्धं पूरितवान् 'एषा नः षष्ठिका जातिरन्योऽन्याभ्यां विविक्तयोः ॥ १ ॥ एतद् गृहीत्वा आरघट्टिकेन पठितं, ततः सुहृदागमनमनोरथोऽस्य, मोहः समायातः, स चारघट्टिकः लोकैश्चूर्णयितुमारब्धः, राज्ञा स्वस्थेन निवारितो लोकः, स च पृष्टः, केन पूरितः श्लोको ?, ममोद्याने साधुरागतो, राजा गतः, तत्र परस्परविचारे राजा राज्येन निमंत्रयति, साधुरपि प्रव्रज्यां प्रतिलाभयति, एवं यावन्न प्रतिबुध्यते तावद् गतः साधुः, प्रव्रज्यां

परिपाल्य मोक्षं च, ब्रह्मदत्तोऽपि निदानफलेनापरित्यक्तविषयानुरागो मृत्वा सप्तमनरकपृथिव्यां त्रयस्त्रिंशत्सागरोपमस्थिति-नारकः समुत्पन्नः, पुनः संसारं भ्रमिष्यतीति ॥

पंडुरज्जाकहाणगं—सिरिदेवीनट्टविहिं हत्थिणिरूवेण रंगमज्झम्मि। दाएई छेरंती गोयम चउहिं सहस्सेहिं ॥ १ ॥ दाऊण गया रज्जं गोयमपुच्छा य कहण पुव्वभवे। रायगिहे भू एसा धुया य सुदंसणपियाए ॥ २ ॥ जोव्वणपत्ताविं केणइ विवाहिया नेव कम्मदोसेणं। वड्डकुमारी जाआ भत्तारविवज्जिया तइया ॥ ३ ॥ पासस्स समोसरणं नंदणवडियाए निग्गया सा उ। अम्मा-पिइयापुच्छण महया इड्ढीए निक्खंता ॥ ४ ॥ अह फुल्लचूलपासे कम्मुदएणं च बउसपरिणामो। जेट्ठामूले मासे मलेण घत्था इमं कुणइ ॥ ५ ॥ कक्खथणगुज्झपाया धोयइ सययं तहेव अविहीए। चोराणि अकालम्मी निवारणं मयहरी कुणइ ॥ ६ ॥ मणिभंधाउ परेणं हत्थे पाए य धोयई सययं। कक्खंतरगुज्झंतरथणंतराई य रागंधा ॥ ७ ॥ जं जं सहावहीणं अण्णं किर किंपि दूसणं कुणइ। तं तस्स हत्थरइं उप्पज्जइ दूसणं तस्स ॥ ८ ॥ अच्छउ ता अण्णजणो अंगुप्पन्नाइं पंच दिव्वाइं। तेसिं चिय ल-ज्जिज्जइ पारद्धं परिहरंतेहिं ॥ ९ ॥ असुइं अपेच्छणिज्जं दुग्गंधं सुत्तसोणियदुवारं। धोवंति खणं सुद्धं एकारससोयसंजुत्तं ॥ १० ॥ बहुसोवि भण्णमाणा न जाव छड्डेइ हट्ठगोणिव्व। ताहे मंडलिबाहिया सा उ कया सेसरक्खट्ठा ॥ ११ ॥ तंबोलपत्तनायं अणवट्ठ तहा अठाणठवणं च। कहियं तीए पावं सारणचइया पुढो वहिया ॥ १२ ॥ सच्छंदठाणगवेसयस्स सच्छंदगहियभिक्खस्स। साणादिपरिभवो तं मा मे सत्तुवि एगागी ॥ १३ ॥ तिण्हारेणं अज्जा भिक्खविचाराइएसु पडिसिद्धा। संकाईया दोसा जेणित्थी एक्क वयरिसमा ॥ १४ ॥ तवनियमसंजमाणं जहियं हाणिं न कप्पए तत्थ। तिगत्तुड्डी तिगसोही पंचविसुद्धी सुसोक्खाय

॥ १५ ॥ अनिवारितसच्छंदा बहुं व वासा तवं च काऊण । आलोयणं च दाउं अणसणविहिणा गया सग्गं ॥ १६ ॥ सोहम्मे सिरिनामा देवग गणिया महिड्ढि पल्लाऊ । तत्तो चुया विदेहे बोहिं लद्धुं पुणो मोक्खं ॥ १७ ॥ पंडरज्जाकहाण संखेवेणं सम्मत्तं । ॥ १३३ ॥

गुणद्वारमाह—

**एगं पंडियमरणं छिंदइ जाईसयाइं बहुयाइं । दिट्ठंतो महसयगो मंडुक्को नंदजीवो वा ॥ १ ॥**

' एकं ' असाधारणं ' पंडितमरणं ' आलोचनादिपूर्वं सर्वविरतिमरण ' छिनत्ति ' विदारयति, कानि ?–जातिशतानि बहूनि, दृष्टान्तोऽत्र महाशतकः श्रावकः, मंडुक्को नन्दश्रावकजीवो वेति गाथार्थः ॥

महाशतककथानकम्–रायगिहे गुणसिलए सेणियराया महासयगसड्ढे । रेवइपामोक्खाओ तेरस भज्जाओ से तस्स ॥ १ ॥ रेवइकुलहरियाओ अट्ठ हिरण्णस्स होंति कोडीओ । वुडिनिहाणपवित्थर अट्ठ वया दससहस्साउ ॥ २ ॥ तेरसभज्जसमेयं मेहुणकम्म न सेसरमणीहिं । एवं सेसवयाणं परिमाणं कुणइ भगेहिं ॥ ३ ॥ संमत्तपुव्वयाणं सपभेयाण वयाण सव्वाणं । गहण जहसत्तीए अभिग्गहाण अणेगाणं ॥ ४ ॥ अभिगयजीवाजीवो पुन्नपावे य लद्धसब्भावो । समणे पडिलाभेई भत्तेण कप्पणिज्जेण ॥ ५ ॥ अह रेवइ चिंतेइ सवत्तिवाघायकारणा अहयं । महसयगेण सद्धिं भोगा णो सतय लहामि ॥ ६ ॥ ता मारेमी एया विसहत्थपओगओ अहयं । जेण हिरण्णं मज्झ महसयगो तहय अणुकूलो ॥ ७ ॥ अंतर वियाणिऊणं विसप्पओग पउंजए छण्हं । सत्थपओगं छण्हं निराकुला भुजई भोगे ॥ ८ ॥ अह मंसलोलुया सा मज्जं पियइऽइमुच्छिया पावा । घुट्ठे य अमाघाए गोणे दो कुलहरे मारे ॥ ९ ॥ अह पन्नरसे वासे पोसहसालाएं पविसई सयए । अह मत्ता सा पावा उवसग्गं कुणइ सयगस्स ॥ १० ॥

भणइ य भो ! भो ! सावय ! भोगे भुंजीहि ता मए सद्धिं। किं ते पुण्णाईहिं ? नो सुणई तं वइं सयए ॥११॥ अह एकारस पडिमा फासेउं ओहिनाण उप्पाडे । सोहम्मे लोलुयं चिय भवणम्मि य जोयणसहस्सं ॥ १२ ॥ पुणरवि सा तह चेवय उवसग्गं वहुविहं कुणेमाणी । भण्णइ पावे नरए दुक्खं पावेसि मरिऊणं॥ १ ॥ भीया य उज्झियायई सत्तमरत्तम्मि अलसवाहीए । पढमम्मि पत्थडम्मि वाससहस्साउ चुलसीई ॥ १४ ॥ भयवं च समोसरिओ गोयमसामिं च पेसए तत्थ । नो खलु कप्पइ गोयम ! सड्ढाणं निठ्ठुरं वयणं ॥१५॥ आलोयावहि एयं दुव्वयणं जेण निरइयारस्स । सुगइफलं संजायइ अह गच्छइ गोयमो भयवं ॥१६॥ पोसहसालं पविसइ महसयगो वंदई सबहुमाणं । गोयमसामी कहइ य सावय ! आलोय अइयारं ॥ १७ ॥ गुणठाणं पडिवन्न निठ्ठुरवयणं न भासिउं जुत्तं । ता महसयगो एयं पडिवज्जइ भगवओ सव्वं ॥ १८ ॥ पडिवज्जिय पच्छित्तं मासियसंलेहणं च काऊण । मरिऊणं सोहम्मे देवो जाओ महिड्ढीओ ॥ १९ ॥ तत्तो चुओ विदेहे बोहिं लद्धुं पुणोवि सामन्नं । चरणं चरिऊण तओ केवलनाणं तओ मोक्खं ॥ २० ॥ महसयगकहाणयं सम्मत्तम् ।

मंडूकजीवकथानकं मिथ्यात्वाधिकारे कथितं, यथाऽसावश्वखुरांत्रनिर्गमने व्रतोच्चारणाष्टादशपापस्थानाशनादिचतुर्विधपरित्यागशरीरप्रतिबन्धव्युत्सर्जनादि कृत्वा मृतोऽष्टमदेवलोके उत्पन्न इति ॥ यतनामाह—

**सुइपाणगाइ अणुसट्ठिभोयणं तह समाहिपाणाइ । धीरावण सामग्गीपसंससणं सड्ढवड्ढा ॥ १३४ ॥**

प्रतिश्रवणमागमस्याहर्निशं क्रियते अनशनिनस्तदेव पानकं, तथा अनुशास्तिः—उत्साहनं, शुभदृष्टान्तेन पुण्यभाक्, तद् भोजनं, तथा समाधिपानकादि दीयते येन विरेचनादिर्भवति, तेन च कृतेन न शरीरदाघादिर्भवति, तथा—" तस्स य चरिमाहारो

इट्ठो दायव्वु तण्हछेयट्ठा। सव्वस्स चरिमकाले अईव तण्हा समुप्पज्जे ॥१॥ तण्हाछेयंमि कए न तस्स अहियं पवत्तए तण्हा। चरिमं च एस भुंजइ सद्धाजणणं दुपक्खेऽवि ॥ २ ॥" 'धीरात्वण सामग्रीप्रशंसां च गीतार्थः संविग्नश्च करोति "नासेइ अ-गीयत्थो चउरंगं सव्वलोयसारंगं। नट्ठम्मि उ चउरंगे नहु सुलहं होइ चउरंगं ॥१॥ श्रद्धाद्यर्थमिति गाथार्थः ॥ अतिचारमाह—

**इहपरलोयासंसापओग मरणं च जीवियासंसा। कामे भोगेसु तहा मरणंते पंच अइयारा ॥ १३५ ॥**

इहलोकाशंसाप्रयोगः इहलौकिकां चक्रवर्त्यादेः ऋद्धिं प्रार्थयति, परलोकाशंसाप्रयोगः देवेन्द्रादिसमृद्धिमनशनस्थोऽभि-लपति, मरणाशंसा व्याध्यभिभूतः पूजादिकं महिमानमपश्यन्नात्मनः ततो मरणं प्रार्थयते, यदि शीघ्रं म्रियेऽहं, तथा जीविताशंसा अनशनी पूजादिकां महिमां लोकैः क्रियमाणां दृष्ट्वा चिंतयति—यदि कंचित् कालं जीवाम्यहं यस्येदृशी प्रतिपन्नानशनस्यापि मे महिमेति यथा विनयवत्यार्यिकायाः कौशाम्ब्यां, "इच्छंतस्सऽवि पूया न होइ जह धम्मघोसे" इत्यादि, 'कामे भोगे य तह' त्ति कामभोगाशंसाप्रयोगः कामान् भोगांश्चाश्रित्येहपरलोकगतान् भोगान् प्रार्थयति, पंचातिचारान्मरणकालभाविनो वर्जयंतीति संटंक इति गाथार्थः ॥ भंगद्वारमाह—

**पडिवज्जिऊणऽणसणं पुणरवि आहारमाइ पत्थेइ। आउट्टियाइगा जइ सो भंगो जायए तस्स ॥ १३६ ॥**

'प्रतिपद्यानशनं' कृत्वा चतुर्विधाहारपरित्यागं पुनरपि कश्चिद् गुरुकर्मा अशुभाध्यवसायः निरुपक्रमबद्धायुष्कः आहा-रादि प्रार्थयति, 'आकुट्टिकादिना' उपेत्यकरणादिना यदि ततो 'भङ्गः' सर्वनाशो जायते 'तस्य' संलेखनारूपनिय-मस्येति गाथार्थः ॥ भावनाद्वारं चरममाह—

पणमामि अहं निच्चं अणज्झणविहिणा निरइयारेहिं । जेहिं कयं चिय मरणं दिट्ठंतो खंदएणेत्थ ॥ १३७ ॥

यैरुपात्तपुण्यप्राग्भारैः शुभाध्यवसायेन सुदेवत्वादिबध्धायुष्कैरनशननमस्कारादिसामग्रीयुक्तैर्मरणं कृतं लोकचमत्कृतिरूपं निरतिचारैः सद्भिस्तेषां सत्पुरुषाणां प्रकर्षेण नौमि—स्तौमि प्रणौमि इति भावना, त्रिकालस्मरणरूपा, बहुमानबुद्ध्या वासितान्तःकरणेन गुणवत्प्रमोदस्य पुण्यहेतुत्वाद्, एतच्चातीव दुष्करं सुकृतानुमोदनं परगतं गुरुकर्मभिः प्राणिभिः, दृष्टान्तोऽत्र निरतिचारानशने स्कन्दकः भगवांश्छद्म इति गाथार्थः ॥ कथानकं च—

श्रावस्त्यां स्कन्दकः परिव्राजकः पिंगलश्रावकेण लोकादिशाश्वतादिकसंसारवृद्धिहानिहेतुमरणप्रश्ने श्रीवीरपार्श्वमुपागत्य जीवसिद्ध्यर्सिद्धिकथनं च ज्वलनप्रवेशादिभिर्बालमरणैः संसारवृद्धिः पंडितमरणैः भक्तपरिज्ञादिभिः संसारहानिः, ततः प्रतिबुद्धः स्कन्दकपरिव्राजकः केवलिप्रज्ञप्तं धर्मं श्रुतवान्, इच्छामि भगवन्! त्वमेव प्रव्राजयितुमित्यादि, ततो भगवान्! स्वयमेव प्रव्राजयति, एवं देवानुप्रिय! गन्तव्यमित्याद्युपदेशं प्रयच्छति, ततः प्रभृति स्कन्दकः श्रमणः सम्पन्नः ईर्यासमन्वित इत्यादि, यावदेकादशाङ्गधारी, अन्यदा पश्चिमरात्रौ चिन्ता समुत्पन्ना—यावच्छरीरसंहननादिसामग्री भगवत्सन्निधानं च तावद् युक्तं गुणरत्नसंवत्सरं तपःकर्म कर्तुमिति, प्रभाते च भगवत्समीपमागओ, भगवता चानुज्ञातः गुणरत्नसंवत्सरं कृत्वा अस्थित्वगवशेषः संजातः, ततः पुनरपि कालान्तरेण चिन्तितवान्—इदानीं मम युक्तः प्रत्यहं आलोचनाक्षामणापूर्वं पंचमहाव्रतोच्चारणं कृत्वा अनशनं प्रतिपद्य संविग्नगीतार्थैः साधुभिः सार्द्धं विपुलं पर्वतं समारुह्य शिलातलं प्रत्युपेक्ष्य प्रमृज्य च कालमनवकांक्षमाणेन पादपोपगमनं युक्तं कर्तुमिति विचिन्त्य प्रभाते भगवत्समीपमागतः भगवताऽनुक्तैनानुज्ञातः, ततः स यथा चिन्तितं तथैव कृत्वा पादपोपगमने स्थितः,

आयुष्कपरिमाणसमाप्त्या अच्युते उत्पन्नः, साधवोऽ(धुभिर)पि कायोत्सर्गं कृत्वा पुनरपि भगवत्समीपमागत्य पात्रसमर्पणं कृत्वा स्क-
न्धतपस्विमरणं निवेदितं यथा तत्र महाव्रतोच्चारणं कृत्वा नमस्कारपरायणः कालगतः, तस्माच्च्युतो महाविदेहे सेत्स्यतीति भावनेति ॥
अभिग्रहाश्च अवश्यं चतुर्मासादौ ग्राह्याः, ते चतुर्विधाः—द्रव्याभिग्रहाः क्षेत्रविषयाः कालरूपा भावप्रधानाश्च, तत्र द्रव्यतः
वर्षमध्ये धर्म्मव्यये द्रव्यं साधूनां मुखवस्त्रिकादि ग्लानाद्यौषधदान प्रतिजागरणा साधूनां धार्मिकवात्सल्यकरणं लोचकृते
दानं पुस्तकादेः पूजा अष्टमङ्गलकादिना, क्षेत्रतः चैत्यगृहे प्रमार्जनादि सुकृतदुष्कृतादेश्चिन्तनं, कालतोऽष्टम्यादिषु घृतस्नानदर्शनं
एकभक्तादि विकाले साधुविश्रामणादिर्भोजनकाले चैत्यवन्दननैवेद्यादि, भावनः भावना अनित्यत्वादयः कायोत्सर्गाभ्यसनं पठनं
गुणनाभिग्रहः स्वगतपरगतसुकृतानुमोदन धर्म्मजागरिकात्रयं स्वपरोदीर्णानां कषायाणामुपशमः कारयितव्यः ॥ उदायनपुत्रः अ-
भीचिः अभिनिवेशेन अनालोचने दृष्टान्तः, तेन हि मरणकाले अनशनादिक्रिया श्रावकधर्म्मयोग्या कृता तथापि भवनपतिषु
उत्पन्नः सम्यक्त्वाभावेन ॥ " सुत्तविउद्धस्स पुणो सुहुमपयत्थेसु चित्तविन्नासो । तथा 'भूतेषु जंगमत्व' द्वितीयजागरिकायां
तथा 'नवकारेण विबोहो' प्रभातजागरिकायां आत्मस्वरूपचिंतको वागुक्तमित्यादि भावना प्रत्युपेक्षणे, सूक्ष्मपदार्थचिन्तन
सुप्तविसुद्धेन कथं विधेयं, यथा एको धर्मास्तिकायः अद्धासमयैर्जघन्यत उत्कृष्टतश्चेत्यादि, सर्वमेतद् व्रतादि सूत्राज्ज्ञातव्यं, तथा
च—" सुत्तादुवायरक्खणगहणपयत्तविसया मुणेयव्वा । " इत्यादि, " सावयाणं सामायारी विहारकालम्मि " इत्यादि, " तम्हा
निच्चसईए बहुमाणं च अहिगयगुणंमि । तित्थंकरभत्तीए सुसाहुजणसेवणाए य (गाहा) " सर्वथा कालज्ञेन भवितव्यं, यत्रस्मिन्
काले तत्तस्मिन्नेव काले कर्त्तव्यमन्योऽन्याबाधया अहोरात्रकर्मस्मारणेन, इतरथा अतिचारः—" अहरत्त सक्रियस्स य पइ-

विणकरणं तु आगमे भणियं। तंमि उ पमायकरणे अइयारो सावयस्स भवे॥१॥माणुस्सं सम्मत्तं सुसाहुसेवा जिणिंदपणिवाओ। साहम्मियस्सु पीई न होइ थेवेहिं पुण्णेहिं ॥२॥ अवरोप्पर जं मच्छरु किज्जइ, तेण आणाधम्मु पुण जिज्जइ। उवसमसारु पसमु वज्जिज्जइ, कायकिलेसओ विहलु पकिज्जइ ॥ ॥" 'तत्रास्य विषयतृष्णा प्रभवत्युच्चैर्न दृष्टिसम्मोहः। अरुचिर्न धर्मपथ्ये न च पापा क्रोधकण्डूतिः ॥ १ ॥ औदार्यं दाक्षिण्यं पापजुगुप्साथ निर्मलो बोधः। लिंगानि धर्मसिद्धेः प्रायेण जनप्रियत्वं चे'त्यादि, यतः प्रथममेव चैत्यवन्दनयोग्यपंचदशगुणयुक्ता योग्याः, शक्रस्तवः संवन्दनं, चैत्यवन्दने मुद्रादित्रिकाणि पंचविधोऽभिगमः त्रिविधा पर्युपासना देवपूजनं सद्धूपदीपदानादि, "नन्नत्थ रायाभिओगेणं गणाभिओगेणं बलाभिओगेणं देवयाभियोगेणं गुरुनिग्गहेणं वित्तीकंतारेण" मित्याद्याकाराः, "वयभंगे गुरुदोसो थेवस्सवि पालणा गुणकरी उ। मूलगुणउत्तरगुणे सव्वे देसे य तह सुद्धी ॥ १ ॥ पच्चक्खाणविहिण्णू पच्चक्खाया गुरू होइ।" कार्तिकश्रावकारुणसारथिस्वाम्यादिभिः, गाविहरणादि मातृ पितृ सोरट्ठ सट्ठग (?) उस्सग्गववायाणं जहट्ठियसरूवजाणणे जत्तो। कायव्वो बुद्धिमया सुत्तणुसारेण नयनिउणं ॥१॥ उस्सग्गववाया, दव्वभावा, सामण्ण तह विसेसमया, निच्छयववहारप्पणणप्पणा, णामाइ चउरो, उत्सर्गापवादौ "नेगमनया य तिन्निवि उस्सग्गो जे भणंति सामन्नं। उज्जुसुयाइं चउरो अववाया विसेसभणणाओ ॥ १ ॥" व्यवहारनिश्चयौ "गुणभूइट्ठे दव्वम्मि जेण मत्ताहियत्तणं भावे। इइ वत्थुं इच्छिज्जइ. निच्छयओ पुण अप्पेवि सव्ववत्थुम्मि जायए भावो. ततोऽसौ द्रव्यास्तिकः पर्यायास्तिकः, नामाइतियं दव्वट्ठियस्स भावो उ पज्जवनयस्स। संगहववहारा. द्रव्यभाव., जं जं तवो. विसुद्धिपाएण. पन्नसहियस्स जाणसु। इहरा., सामान्यविशेषः "भरहेरवयविदेहे पण्णरसवि कम्मभूमिया साहू। एकम्मि पूइयम्मी सव्वे ते पूइया

तद् युक्ता ह्यवधीरणा ॥ ६ ॥ यच्चासमंजसमिह छन्दःसमयार्थतो मयाऽभिहितम् । पुत्रापराधवत्तन्मर्षयितव्यं बुधैः सर्वम् ॥ ७ ॥ एतट्टीका प्रोक्ता श्रावकानन्दकारिणी नाम्ना । श्रीदेवगुप्तसूरिभिर्भावयितव्या प्रयत्नेन ॥ ८ ॥ साधुप्रयोगाय मया प्रयासः, कृतः स पुण्याय च एष धर्म्मः। अतोऽत्र मात्सर्यमभिप्रपद्य, मा कोऽपि कार्षीन्मम पुण्यविघ्नम् ॥ ९ ॥ त्रिसप्ततौ सहस्रे, मासे कार्तिकसंज्ञिते । श्रीपार्श्वनाथचरिते, दुर्गमीये च पत्तने ॥ १० ॥ श्रावकानन्दटीकेयं, नवपदस्य प्रकीर्त्तिता । जिनचन्द्रसूरिनाम्ना, गच्छे ओकेशसंज्ञिते ॥ ११ ॥ कक्काचार्यशिष्येण कुलचन्द्रसंज्ञितेनैषा सूचिता टीका निर्ज्जरार्थमुभयकर्म्मणां ॥ शिष्यस्य प्रतिशिष्यस्य, चोपकाराय जायते । टीकेयं नवपदस्यास्तु, यथार्थेयं प्रवाच्यता ॥ १२ ॥ ग्रन्थाग्रं० २५१६,

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः । दोषाः प्रयान्तु सततं सर्वत्र सुखीभवतु लोकः ॥ १ ॥

इति नवपदलघुवृत्तिः समाप्ता.